वहन्ति मनोरमकाव्यकलां
तव दासजना जनयन्ति विनोदम्
त्वदन्तिकतो हि जयन्ति शिव !
घटयन्ति समस्तमियन्ति समोदम् ॥ २१ ॥

गृहे मदयुक्तानां दन्तिनाम् हस्तिनाम् घटाः समूहाः । नादं कुर्वन्ति । ते लोकानामुपरि दानरूपं मेघं वर्षन्ति । निजगुणैः भुवनानि पूरयन्ति । गोदाम् अनु गोदावरीनदीतटे मनोज्ञेषु वनेषु विहरन्ति । (गोदावरीतटं प्राकृतसौन्दर्यार्थं प्रसिद्धम् । ) तव दासजनाः काव्यकलाद्वारा लोकानां मनोविनोदं कुर्वन्ति । त्वत्सकाशाद् इयन्ति एतावन्ति राजत्वकवित्वादीनि घटयन्ति सम्पादयन्ति ॥ २१ ॥

घरमें मतवाले हाथी चिग्घाड़ते हैं । लोगोंपर वे दानके बादल बरसाते हैं—खूब दान करते हैं तथा अपने गुणोंसे विश्वको आप्यायित कर देते हैं । गोदावरी-तटपर सुन्दर वन-उपवनोंमें विहार करते हैं । तुम्हारे दास सुन्दर काव्यरचना करते हैं तथा उसके द्वारा अपना और दूसरोंका मनोरञ्जन करते हैं । हे भगवती पार्वती तथा भगवान् शंकर ! आपके दास आपके पाससे ये सभी पदार्थ बड़े आनन्दके साथ प्राप्त करते हैं ॥२१॥

## १०—किरीट

श्रीगङ्गातः प्रार्थना

जन्मनि जातु कृतं न हितं मम
देवगणो दुरितं किमपोहतु
जाह्नवि ! कं शरणं परियामि
ममोद्धरणं किल कः परिशोचतु ।
दीनमुपायविहीनमिमं
दयया परिगृह्य गिरं मम बोधतु
देहविमोकदिने भुवनेश्वरि !
गात्रमिदं पुलिने तव लोठतु ॥ २२ ॥

आत्मनः परेषां च हितं न कृतम्। देवगणो मम पातकं किमिति दूरीकरोतु ? न कुर्यात्। हे गङ्गे ! ममोद्धारस्य कस्य हृदये चिन्तास्ति ? न कस्यापि । साधनहीनम् इमं दीनं दयाद्वारा स्वीकृत्य मम वाणीम् प्रार्थनाम् भवती एव शृणोतु । का सा प्रार्थना ? हे 'भुवनाधीश्वरि गङ्गे ! देहत्यागदिने मम इदं शरीरं तव तटसैकते लोठतु' ॥ २२ ॥

इस जन्ममें मैंने कोई हित—पुण्यका काम नहीं किया। तब देवतालोग मेरे पातक कैसे दूर करेंगे ? हे भगवति गङ्गे ! मैं किसके शरण जाऊँ, मेरे उद्धारकी किसको चिन्ता है ? उपायों (साधनों) से हीन इस दीनपर दया करके आप ही मेरी वाणी ( पुकार ) सुनिये—'हे त्रिभुवनकी स्वामिनि ! मेरी देह छूटनेके दिन मेरा यह शरीर आपके तटकी रजमें लोटे', यही प्रार्थना है २२ ॥

## ११–अरसात

पातकपुञ्जमपोहयितुं भुवि
याभिययौ व्यपदिश्य भगीरथम्
खेलदवारितवीचिघटा च
जटासु जगाम निमीलितमन्मथम्।
मञ्जुलनाथ ! न शोच मना-
गधुनापि पुनाति भवादृशमुद्व्यथम्
देवधुनी तव सा विधुनीत
मनोमधुनीतमलीकमनोरथम् ॥ २३ ॥

लोकानां पातकसमूहम् अपोहयितुं दूरीकर्तुं भगीरथं व्यपदिश्य भगीरथं नृपं निमित्तीकृत्य या भुवि अवततार । खेलन्ती अवारिता ( अप्रतिरुद्धा ) तरङ्गघटा यस्याः ईदृशी या गङ्गा निमीलितमन्मथं संहृतकामदेवं शिवं जटासु जटानामुपरि जगाम प्राप। त्वं शोकं मा कुरु, अधुनापि सा गङ्गा भवादृशम् उद्व्यथम् उत् उच्चैः अधिका व्यथा यस्य तादृशं जनं पवित्रीकरोति । सा देवनदी मनोमधुना नीतम् मनःकल्पितम्

मधु मनोमोदकमितिवत् यत् अलीकसुखम् तेन नीतम् सम्पादितम् मिथ्याभिलाषम् विधुनीत अपनयेत् । मनःकल्पितसांसारिकमधुरमनोरथस्य वशात् त्वं विषयेषु निबद्धो भवसि । गङ्गा तमेव ते विषयाभिलाषं दूरीकुर्यादित्याशयः ॥ २३ ॥

राजा भगीरथको निमित्त बनाकर संसारमात्रके पापसमूहको दूर करनेके लिये जो भूमिपर आयीं तथा वेगसे फैलते हुए प्रबल तरङ्ग-समूहको लेकर जो कामदेवको भस्म करनेवाले श्रीशंकरकी जटाओंमें पहले-पहल उतरीं, वे पापहारिणी गङ्गा आज भी तुम-सरीखे पातक-पीड़ितोंको पवित्र करती हैं। अतः हे मञ्जुनाथ ! तुम चिन्ता मत करो। वे देवनदी श्रीगङ्गा मनसे कल्पना किये सुखोंसे सम्बद्ध तुम्हारे उस झूठे मनोरथको हटा देंगी, जिसके कारण तुम इन सांसारिक विषयोंमें फँसते हो ॥ २३ ॥

## १२—दुर्मिल

जननावधि लौकिकसंघटना-
गतचित्तमनामयहीनमिमम्
सदनावनिवित्तयशोललना-
दिसमानयनानिशलीनमिमम्
अपि मञ्जुलनाथ ! दयाविधिना
कुरु ते चरणाभिमुखीनमिमम्
अधुना दवदुःखघनाकुलितं
यदुनाथ ! सनाथय दीनमिमम् ॥ २४ ॥

जननावधि जन्मन आरभ्यैव लोकस्य कार्यपरम्परासु गतं चित्तं यस्य। अतएव अनामयहीनम् आमयाभावेन रोगाद्युपद्रवाभावेन रहितम् आमयसहितमिति यावत्। गृह-भूमि-धन-कीर्ति-स्त्री-प्रभृतीनां संग्रहे नित्यरतम्। दव (वनवह्नि) वत् यद् दुःखघनं दुःखसम्भारः तेन व्याकुलितम् इमं दीनं सनाथय सर्वापद्भ्यो रक्षेति भावः ॥ २४ ॥

इसका चित्त जन्मसे लेकर आजतक लौकिक घटनाओंमें ही लगा

रहा है, इसीलिये यह रोग आदि अनेक उपद्रवोंसे घिरा है। इतना ही नहीं घर, जमीन, धन, कीर्ति, स्त्री—आदिके संग्रहमें ही यह रात-दिन व्यस्त रहता है। हे नाथ! अब आप अपने दयाके विधानसे इसको अपने चरणोंके सम्मुख अर्थात् शरणापन्न कीजिये। हे यदुनाथ! दावाग्निके समान चारों ओर फैले हुए दुःखसमूहसे व्याकुल इस दीनको अब आप ही सनाथ—निरापद बनाइये॥ २४॥

[ ३८ ]

## अश्वधाटी

**संदाहिनित्यपरनिन्दादिपापकृतिकन्दाधिरोपमुपयन्**
**किं दानलोभलवसंदानितो भ्रमसि मन्दालयेषु नितराम्।**
**त्वं दास्यमेत्य मुनिवृन्दार्चनीयमघबन्धात्ययाय भज भो**
**मन्दारमञ्जुमकरन्दालिमेदुरमुकुन्दाङ्घ्रिकञ्जमनिशम्॥१॥**

संदाहिनां हृदयदाहकराणां परनिन्दादिपापकार्याणां यः कन्दः मूलम् तस्यारोपणम् उपयन् कुर्वन्। संदानितो बद्धः। अघबन्धात्ययाय पापबन्धनदूरीकरणाय। मन्दार०—पारिजातस्य मञ्जुर्या मकरन्दालिः मकरन्दराशिः तया मेदुरम् सान्द्रस्निग्धम् अङ्घ्रिकमलम् भज॥ १॥

अरे मञ्जुनाथ! हृदयदाहक परनिन्दादि पापकार्योंका बीजारोपण करते हुए तथा तनिक-से दानके लोभसे बँधे हुए तुम मन्दबुद्धियोंके घरोंमें निरन्तर क्यों घूमते हो? पापके बन्धनसे छूटनेके लिये दास्यभावको स्वीकार करके—पारिजात (कल्पवृक्ष) के मकरन्द (गुणों) से पूरित मुकुन्द-चरणकमलका सेवन करो, जिसकी मुनिगण भी अर्चना करते हैं॥ १॥

**भालानतावपि करालास्यमश्नमहिपालाग्र्यमेनमयसे**
**कालातिपातिमदहालावमत्तधनपालालयेषु विचरन्।**
**बालायितोऽसि बुधमालार्चितोऽपि न ममालापमुत्सृज सखे**
**व्यालालिकेऽपि रुचिजालावभासिव्रजपालाङ्घ्रिमर्चय चिरम्॥**

भाला०—मस्तकनमनेऽपि करालमुखम् एनम् अज्ञम् महीपालश्रेष्ठम् अयसे उपगच्छसि । काला०—कालक्षेपकाः, मदमद्येन अवमत्ता ये धनपालाः धनिनः । व्याला०—कालियसर्पस्य मस्तकेऽपि कान्तिसमूहेन अवभासिनम् प्रकाशिनम् श्रीकृष्णस्य चरणम् ॥ २ ॥

मस्तक झुकानेपर भी रौद्ररूप धारण किये रहनेवाले इन महीपालोंके पास तुम बड़े चावसे जाते हो तथा व्यर्थ कामोंमें समय गुजारनेवाले, अभिमानकी मदिरासे मतवाले हुए धनपतियोंके घरोंमें घूमते हो । तुम पण्डितोंकी पंक्तियोंसे पूजित होकर भी बालकके समान हो । अतः मित्र ! मेरे कथनकी उपेक्षा मत करो । कालियनागके मस्तकपर भी कान्तिसमूहसे उद्भासित व्रजपाल श्रीकृष्णके चरणोंकी सदा पूजा करो ॥ २ ॥

**भारीभवद्भुवनचारीद्धदुःखविनिवारी व्रजावनिपतिः**
**पारीन्द्रदन्तपरिदारीन्द्रगर्वपरिहारी हरेत विपदम् ।**
**नारीजनेन परिवारी दिवाकरकुमारीतटे मुदमयन्**
**हारीन्द्रनीलरुचिहारी गरिष्ठगिरिधारी धिनोतु सततम् ॥३॥**

भारी०—भारायितं यद् भुवनचारिणाम् इद्धं प्रवृद्धं दुःखं तस्य निवारकः । पारी०—पारीन्द्रो हस्ती (कुवलयापीडः) तस्य दन्तविदारकः । हारी०—हारी (मनोहारी) य इन्द्रनीलः तस्य रुचिं हरति विडम्बयति । धिनोतु प्रीणयतु ॥ ३ ॥

संसारी लोगोंके दुःखभारको दूर करनेवाले, कुवलयापीड़ हाथीके दाँतोंको उखाड़नेवाले तथा (बायें हाथकी कानी उँगलीपर गिरिराज गोवर्धनको धारण करके) इन्द्रके गर्वको चूर करनेवाले व्रजभूमिके स्वामी श्रीकृष्ण हमारी आपदाओंका निवारण करें । गोपीजनोंसे परिवृत होकर सूर्यकुमारी यमुनाके तटपर विहार करनेवाले, सुन्दर नीलमकी भी कान्तिको चुरानेवाले गिरिधारी हमको आनन्दित करें ॥ ३ ॥

**आयासहेतुसुतजायाधनादिदुरुपायाय धावसि चिरं**
**कायावशोषिदृढदायाददुःखमवसायान्तरे तु तुदसे ।**

आयाहि सर्वमपहायावसादमयि ! मायाप्ररोहणहरः
पायादशेषदुरपायादसौ जलधिजायाधवोऽनवरतम् ॥४॥

आया०—धनादीनां दुरुपायाय दुष्टोपायार्थम् । अवसायपर्यन्ते ज्ञात्वा । तुदसे व्यथसे । आयाहि०—अयि सर्वम् अवसादं दुःखम् अपहाय आयाहि । माया०—मायायाः प्ररोहणम् अभिवृद्धिं हरति । जल०—जलधिजायाः लक्ष्म्याः धवः पतिः ॥ ४ ॥

अरे मञ्जुनाथ ! तुम ( व्यर्थका ) परिश्रम देनेवाले पुत्र-स्त्री-धनादिकी प्राप्तिके लिये चिरकालसे दौड़ रहे हो तथा शरीरको सुखानेवाले भाई-बन्धुओंके दुःखको सोच-सोचकर हृदयमें पीड़ित होते हो । इस सारे दुःख-को छोड़कर इधर चले आओ । मायाके बढ़ते हुए प्रवाहको रोक देनेवाले ये लक्ष्मीपति इस अशेष हानिसे तुम्हारी रक्षा करें ॥ ४ ॥

अंसावरोहितनृशंसावलीविहितशंसाप्रसारमुदितो
हंसावदातभवनं साधयस्यतिरिरंसापहिंसितमनाः ।
त्वं सारशून्यपरहिंसापरेष्वथ च किं साभिमानमयसे
संसारसारमिह संसाधयस्व किल कंसारिपादकमलम् ॥५॥

अंसा०—स्कन्धे स्थापिताः अत्यादरभाजनानि इत्याशयः । ये नृ-शंसास्तद्विहिता शंसा प्रशंसा । रिरंसा०—रन्तुमिच्छया बलाद्धिंसितम् अर्थात् हीनीकृतम् मनो यस्य, ईदृशस्त्वम् । परहिंसातत्परेषु दुष्टेषु साभिमानम् किम् अयसे गच्छसि ॥ ५ ॥

कंधोंपर चढ़ाये गये ( अर्थात् सिर चढ़े ) क्रूर लोगोंकी की हुई प्रशंसासे फूलकर तथा विहारकी इच्छासे विकृतमन होकर तुम उनके उज्ज्वल सुन्दर महलोंमें जाते हो । अरे निस्सार एवं परहिंसामें लगे लोगोंमें तुम बड़े अभिमानसे क्यों जाते हो ? तुम तो संसारके सार कंसनिकन्दन भगवान् श्रीकृष्णके चरण-कमलकी ( प्राप्तिके लिये ) भली प्रकार साधना करो ॥ ५ ॥

शालीनवंशरुचिशालीष्टगोपवनितालीमयन् प्रणयतो
यालीकलोकपरिणालीमपास्य चिरमालीयताङ्घ्रिकमले ।

**कालीभवत्कुटिलकालीयपन्नगफणालीषु नर्तनपटु-**
**स्तालीवने विपिनपालीप्रमोदि वनमाली मुदं दिशतु मे ॥६॥**

शालीने विनम्रे वंशे रुचिशालिनी इष्टा च या गोपवनितानाम् आली पङ्क्तिः तां प्रणयतः प्रेम्णा अयन् प्राप्नुवन् । या वनिताली अलीकां लोकप्रणालीम् अपास्य चिरम् चरणकमले आलीयत लीनाभवत् । काली०—कालरूपेण परिणमन् यः कुटिलकालियसर्पस्तस्य फणापङ्क्तिषु । विपिन०—विपिनं वनं पालयन्ति ता विपिनपाल्यः ताभिः प्रमोदते तच्छीलो वनमाली ॥ ६ ॥

जो झूठी लोकमर्यादाका परित्याग करके श्रीहरिके अभय चरणकमलोंमें सदाके लिये लीन हो गयी थीं तथा जिन्होंने निष्कलङ्क गोपवंशको उजागर किया, उन अपनी प्रियतमा गोपवनिताओंका प्रेमसे अनुसरण करनेवाले, काल-की तरह भयानक एवं कुटिल कालियकी फणालीपर नृत्यशाली तथा तालवनमें गोपाङ्गनाओंसे प्रमोद करनेवाले वनमाली हमें आनन्दित करें ॥ ६ ॥

**संतापहेतुधनसंतानलाभसुखसंतानलोलुपमना**
**हिन्तालतालतरुकुन्तावृतासु हरिदन्ताटवीषु रमसे ।**
**अन्तावसायिगृहचिन्ताशतस्य तव हन्तारमाश्रयसि कं ?**
**किं तावदीप्ससि दुरन्ताढ्यमेहि हरिचिन्तामणिं श्रय सखे ॥७॥**

धनादीनां लाभस्य यः सुखसंतानः सुखपरम्परा तस्यां लोलुपचित्तः । हिन्ता०—हिन्तालादयस्तरव एव कुन्ता भल्लास्तैः आवृतासु । हरिद०—दिगन्ताटवीषु दूरपर्यन्तव्यापिषु वनेषु । अन्ता०—अन्ते अवसीयते समाप्यते तादृशस्य तव गृहचिन्ताशतस्य । हन्तारं नाशकम् कम् आश्रयसे ? कोऽपि ते गृहचिन्तानिवारको नास्तीत्यर्थः । दुरन्ता०—दुरन्तम् भयंकरम् आढ्यं धनिनं किम् ईप्ससि वाञ्छसि । हरिरूपं चिन्तामणिं श्रय ॥ ७ ॥

अरे जीव ! तुम संताप देनेवाले धन और संतान-परम्पराके लोभसे हिन्ताल-ताल आदि तीखे वृक्षोंसे व्याप्त सुदूर जंगलोंमें भटकते हो; परंतु तुमने अबतक अनन्त चिन्ताओंके नाश करनेवाले किसका आश्रय लिया ?

भय देनेवाले इन धनिकोंको क्यों चाहते हो ? अरे मित्र ! आओ, हरिरूप चिन्तामणिका आश्रय लो ॥ ७ ॥

**आताम्रमञ्जुमणिवातायनस्थमनुयाता भवान् नरपतिं**
**धातापि यत्र नुतिधाता भवेत्तमनुयातास्म्यहं व्रजपतिम् ।**
**आतापहेतुरवपातादिकृद्यदि तु दाता तवास्ति नृपति-**
**र्भ्राता बलस्य परिपाता व्रजस्य मम दाता शिवस्य स भवेत् ॥**

भवान्०—भवान् नरपतिम् अनुयाता ( तृन् ), तर्हि यत्र विधातापि स्तुतिस्थापकः ईदृशं व्रजपतिमहमनुयातास्मि अनुयास्यामि ( लुट् ) । अवपाता०—क्रोधे सति अधःपातादिं करोति । बलस्य बलभद्रस्य ॥ ८ ॥

अरे मन ! तुम यदि पद्मराग मणियोंसे जड़े हुए झरोखेमें बैठे नरपतिका आश्रय लोगे तो मैं उन व्रजपतिका आश्रय लूँगा, जिनकी विधाता भी स्तुति किया करते हैं । संताप देनेवाला तथा अधःपतनकी ओर ले जानेवाला राजा यदि तुम्हारा दाता है तो व्रजके त्राता एवं बलरामजीके भ्राता श्रीकृष्ण मेरे कल्याणके दाता हैं ॥ ८ ॥

**छन्दातिवर्तिजननिन्दापरो ह्यहममन्दाभियोगनिरतः**
**क्रन्दामि नित्यमघवृन्दाधिपत्यमुपयन् दास्यदुःखितमनाः ।**
**नन्दालये ध्रुवमलिन्दान्तरस्थितमिलिन्दायितं जनहितं**
**विन्दामि नूनमरविन्दायताक्षमिह वृन्दावनेशमनिशम् ॥९॥**

छन्दातिवर्तिनो निजाभिप्रायबहिर्भूतस्य जनस्य निन्दापरः अहम् असन्दे तीव्रे अभियोगे निरतः । अघ०—पापराशेः आधिपत्यं स्वामित्वं प्राप्नुवन् दासभावदुःखितः क्रन्दामि । अलिन्दा०—द्वारप्रकोष्ठकान्तरस्थितमिलिन्द ( भ्रमर ) सदृशम् ॥ ९ ॥

अपने मनके विपरीत आचरण करनेवाले लोगोंकी निन्दामें तत्पर मैं निरन्तर सांसारिक कार्योंमें लगा रहता हूँ, किंतु दासतासे दुखी एवं पापराशिकी ही सम्पत्ति बटोरता हुआ मैं सदा रोता रहता हूँ । अतः अब तो

मैं नन्दगृहके द्वारपर भौंरेकी तरह स्थित, जनताके हितकारक, कमलदल-लोचन वृन्दावनेश्वरका आश्रय लेता हूँ ॥ ९ ॥

( ३९ )

# नारायणनर्कुटकम्

जय जलधिप्रसूतकमलामुखलालसदृक्
जय जलजाभिजात चरणानतभक्ततते ।
जय जडजङ्गमादिजननस्थितिसंहृतिकृत्
जय जनतापहारक जगन्महनीय हरे ॥ १ ॥

कमलामुखे लालसा साभिलाषा दृक् यस्य तत्सम्बुद्धौ । जलजवत् अभिजातौ सुन्दरौ यौ चरणौ तयोरानता भक्तततिर्यस्य ॥ १ ॥

क्षीरसागरसे उत्पन्न हुई लक्ष्मीके मुखकमलपर लालसापूर्ण दृष्टि रखनेवाले आपकी जय हो ! जिनके कमल-कोमल चरणोंको भक्तमण्डली प्रणाम किया करती है, ऐसे आपकी जय हो ! जड-चेतन सभीकी उत्पत्ति, स्थिति और संहार करनेवाले प्रभो ! आपकी जय हो ! मनुष्योंके तापोंको दूर करनेवाले जगत्पूजनीय श्रीहरि ! आपकी जय हो ॥ १ ॥

कति कति वा न घोरपुरुपातकिनो भवता
दयित दयावशेन भवसागरतो ह्यविताः ।
इममतिदीनमङ्ग मतिहीनतमं रहयन्
कथमु दधासि नाथ करुणावरुणालयताम् ॥ २ ॥

घोराः पुष्कलपातकयुक्ताः । अङ्ग सम्बोधने । अतिदीनम्, मति०—मत्या अत्यन्तं हीनम् इमं माम् रहयन् दूरे कुर्वन् ॥ २ ॥

प्रियतम ! दयाके वशीभूत होकर आपने कितने-कितने घोर एवं महान् पातकियोंको इस संसार-सागरसे नहीं उबारा ? किंतु इस अत्यन्त दीन, परम मतिहीनका त्याग करते हुए आप करुणावरुणालय (दयासागर) की पदवीका कैसे निर्वाह कर सकेंगे ? ॥ २ ॥

सततमलीकलोभलवमोहमरीचिकया
गुरुगहने भ्रमामि भववभीमवने विमनाः ।
प्रदिश दयावतार तव पादतलोपगते
दलदरुणाम्बुजाततरुणां करुणार्द्रदृशम् ॥ ३ ॥

अलीको यो लोभलवः तेन, मोहमरीचिकया च । अथवा लोभलवश्च मोहश्च तयोर्मृगतृष्णिकया, गुरौ गहने भवरूपे भीमे वने विमनाः सन् भ्रमामि । दलद०—दलत् विकसत् यत् अरुणम् अम्बुजातम् कमलम् तद्वत् तरुणां नवीनाम् तव करुणार्द्रां दृशं पादपतिते मयि प्रदिश देहि ॥ ३ ॥

झूठे लोभलेश और मायाकी मरीचिका ( मृगतृष्णा ) में पड़ा हुआ मैं इस अत्यन्त गहन भवाटवी ( संसाररूपी जंगल ) में दुखी होकर निरन्तर घूम रहा हूँ। हे दयावतार! चरणतलमें पड़े हुए इस दीनपर विकसित अरुण कमलके समान नवीन करुणापूर्ण दृष्टि डालिये ॥ ३ ॥

भ्रमिमुपगत्य भूरि भवभीमवने गहने
चिरमियमद्ययावदुपयातवती विपदम् ।
रतिमुपगच्छतान्मतिरशान्तिशताकुलिता
मम यमुनातटीतरुविहारपटीयसि सा ॥ ४ ॥

इयम् मम मतिः भवरूपे गहने भीमे ( भयंकरे ) वने भूरि भ्रमिम् भ्रमणम् उपगत्य अद्ययावत् ( अद्यपर्यन्तम् ) चिरं विपदम् नानाविध-जन्मादिविडम्बनाम् उपयातवती प्राप्तवती । अशान्तिशतेन आकुलिता सेयं मतिः यमुनातटवर्तिवनविहारपटुतमे श्रीकृष्णे रतिं लभताम् । खिन्नस्य वनविहारनिपुणे रतिलाभः समुचित एवेत्याशयः ॥ ४ ॥

इस गहन एवं भयंकर भवाटवीमें चिरकालसे आजतक चक्कर खाते रहकर मेरी यह बुद्धि घोर विपत्तिमें पड़ी हुई है। अब सैकड़ों प्रकारकी अशान्तियों-से व्याकुल यह मति शान्तिदायक यमुनातटपर वनविहार करनेवाले श्रीहरिके चरणोंमें प्रीति प्राप्त करे ॥ ४ ॥

**पुरुपरितापतान्तजनतागुरुतापहृते**
**य इह ततान तारणधृतामवतारधुराम् ।**
**व्रजवनिताहिताय नवरासभृतां वरिता**
**भुवि भवतान्मदीयकवितास्ववितां स हरिः ॥ ५ ॥**

पुरु ( पुष्कल ) परितापेन तान्ता खिन्ना या जनता तस्या गुरुपरितापस्य हृते हरणाय, भावे क्विप् । यः हरिः तारणाय लोकानामुद्धाराय धृताम् अवतारधुराम् अवताररूपं भारम् ततान दधारेति यावत् । रासभृतां रासविलासिनां वरिता वरः । हरिः मम कवितासु अविता सर्वविधरक्षायां जागरूको भूयादित्याशंसा ॥ ५ ॥

घोर परितापसे पीड़ित जनताके संतापको दूर करके उनका उद्धार करनेके लिये जिन्होंने पृथ्वीपर अवतारका भार स्वीकार किया है, व्रजवनिताओंके हितके कारण रासविलास करनेवालोंमें श्रेष्ठ, सर्वरक्षक वे श्रीहरि मेरी कवितामें विहार करें ॥ ५ ॥

**किमु कुटिलाशयेषु वत फल्गुफलस्पृहया**
**सततमनादृतोऽपि परिधावसि धर्षितधीः ।**
**परिहर पङ्किले पथि पदोपगमप्रसरं**
**परिचर मञ्जुनाथ ! यदुनाथपदाम्बुरुहम् ॥ ६ ॥**

निस्सारस्य फलस्य वाञ्छया अनादृतः अतएव धर्षितधीः कुण्ठीकृतबुद्धिः सकपटचित्तेषु किं धावसि ? पदोप०—पादक्षेपम् ॥ ६ ॥

अरे मञ्जुनाथ ! तुम निस्सार फलके लालचसे तिरस्कृत और कुण्ठितबुद्धि होकर भी कुटिलबुद्धि लोगोंके पीछे क्यों दौड़ते फिरते हो ? इस रपटीले मार्गमें पैर रखना अब छोड़ दो । अब तो तुम श्रीयदुनाथके चरण-कमलोंकी परिचर्या करो ॥ ६ ॥

**मुनिमनसामगम्यगुणगीतिगतिर्नितरां**
**व्रजजनजीवनाय इयाय धरावलये ।**
**मनसि मनोरथप्रचिततापशताकुलिते**
**जलभृतनीलनीरदतनुः स हरिर्विहरेत् ॥ ७ ॥**

मुनिमनसामपि अगम्या अबोध्या गुणा गीतयः यशांसि गतयः चिकीर्षामार्गाश्च यस्य । मनोर०—नानाभिलाषैः संचितं यत् तापशतं तेन आकुलिते । तापाकुलस्य सजलजलदविहारेण स्वाभाविकमेव सुख-मित्याशयः ॥ ७ ॥

जिनके गुण, यश और चालें मुनियोंके मनके लिये भी सर्वथा अगम्य हैं, वे ही प्रभु व्रजजनोंके जीवनके लिये इस भूमण्डलमें पधारे थे। विविध मनोरथोंकी विडम्बनासे संचित किये संतापसे व्याकुल इस मनमें सजलमेघके समान सुखद-सुन्दर-शरीर वे हरि विहार करें। ( तापपीड़ितके लिये सजल मेघ स्वाभाविक ही सुखकारी होता है ) ॥ ७ ॥

भुवमवगम्य भूरितरपापभराकुलिता-
मवितुमवातरद् य इह दीनदयाविवशः ।
निबिडनृशंसकंसमदहिंसन केलिधरो
मयि स कृपामपारभवपारकरः कुरुतात् ॥ ८ ॥

दीनेषु दयापरवशो यः अवितुं दीनान् रक्षितुम् अवातरत् । अपार-भव०—अपारस्य भवस्य पारे करोति स मयि कृपां कुरुतात् ॥ ८ ॥

भूमिको पापभारसे व्याकुल जानकर दीनोंके प्रति दयाके परवश हो जो उनकी रक्षा करनेके लिये यहाँ अवतार लेते हैं तथा जिनकी क्रीडा अति नृशंस कंसके मदको चूर्ण करनेवाली है, अपार भवसागरसे पार करनेवाले वे श्रीहरि मुझपर कृपा करें ॥ ८ ॥

[ ४० ]

## चतुष्पदीचयनम्

### [ मदनविजयः ]

शिरसि बर्हिचन्द्रकचयशोभी । विलुलितकुन्तललोचनलोभी ॥
श्रवसि मिलन्मणिकुण्डलधारी । चिबुकचुम्बिहीरकरुचिहारी ॥

उरसि मालतीदामसुगन्धे । मिलन्मञ्जुगुञ्जाचयबन्धे ॥
सितदुकूलमावृतमहमूहे । नैशतुहिनमिव कुसुमसमूहे ॥
श्रोणिपिहितपीताम्बरशोभा । मनसि मुनेरपि विलुलितलोभा॥
पदनलिने मणिनूपुरनादी । स्मरमाह्वातुमिवानकवादी ॥३॥
शरदि पूर्णशशधररुचिशाली । प्रपदचुम्बिलम्बितवनमाली ॥
जयति हरिर्नवरासविहारी । मुदितमनोजगर्वपरिहारी ॥४॥

मदनमनोहारी हरिर्नवनटवरवेषेण ।
जयति कलानिधिमपि जयन्मुखसुषमालेशेन ॥ ५ ॥

चन्द्रकचयः पिच्छाग्रभागसमूहः । विलुलितैः कुन्तलैर्लोचने लोभयति तच्छीलः । हीरकरुच्या ( कान्त्या ) मनोहारी ॥ १ ॥ गुञ्जाचयस्य बन्धो यस्मिन् उरसि । उरसि आवृतं दुकूलं कुसुमसमूहे नैशम् निशासम्बन्धि तुहिनं नीहारमिव अहम् ऊहे उत्प्रेक्षे ॥ २ ॥ श्रोणौ कट्याम् । विलुलित ( कृत ) लोभा । निजप्रभावं दर्शयितुं मदनम् अह्वातुं आनकं दुन्दुभिं वादयति तच्छीलः, नुपूरनादो नास्ति मदनाह्वानाय दुन्दुभिघोषः सोऽयमित्याशयः ॥ ३ ॥ प्रपदं पादाग्रभागः ॥ ४ ॥

श्रीमस्तकपर मयूरपिच्छोंकी शोभा है, घुँघराली अलकोंको देखकर आँखें लुभा जाती हैं । कानोंमें मणिजटित कुण्डल और ठोढ़ीपर हीरेकी कान्तिसे अद्भुत शोभा है ॥ १ ॥ सुन्दर गुञ्जामालासे सुशोभित वक्षःस्थलपर चमेलीके हारोंकी सुगन्ध है । उसपर अत्यन्त ही पतला सफेद दुपट्टा ऐसा प्रतीत होता है मानो प्रातःकाल पुष्पोंपर ओस छायी हो ॥ २ ॥ कटिमें मनोहर पीताम्बरकी शोभा मुनियोंके मनको भी लोभित करती है । चरणकमलोंमें मणिजटित मनोहर नूपुरोंकी ध्वनि हो रही है मानो कामदेवको मैदानमें बुलानेके लिये नगारा बजाया जा रहा हो ॥ ३ ॥ शरदृतुमें पूर्ण चन्द्रमाकी-सी कान्तिवाले श्रीहरि पूर्ण चन्द्रमाकी चाँदनीमें विराज रहे हैं । उनके चरणोंके अग्रभागको चुम्बन करती हुई वनमाला लटक रही

है। यों रासविहारके * लिये संनद्ध श्रीहरि मनमें मुदित कामदेवके गर्वको दूर करनेवाले हैं ॥ ४ ॥ ऐसे युद्धनाट्यके लिये नटवरका वेष धारण किये और उसके द्वारा कामके भी मनको हरण करनेवाले तथा मुख-शोभाके लेशमात्रसे चन्द्रमाका भी पराजय करते हुए श्रीहरिकी जय हो ॥ ५ ॥

**सुरभिकुसुमशेखरपरिराजी । कर्णकलितकुण्डलविभ्राजी ॥**
**कनककलितकेयूरविभासी । मध्यमिलितमाणिक्यचकासी ॥**
**मधुरमुखो मणिकुण्डलभासा । नवमणिना विभ्राजति नासा ॥**
**कम्बुकण्ठराजन्मणिदामा । वदनविजितशारदशशिधामा ॥ ७ ॥**
**कनकवलयशोभिनि मणिबन्धे । रत्नविभा नयनानि निरुन्धे ॥**
**पीतपटे मणिरशना रम्या । सांध्यनभसि तारालिरदम्या ॥**
**जङ्घायुगलमुदञ्चति ललितम् । नूनमलिन्द्यनीलमणिकलितम् ॥**
**युवतिमनोहररूपविभासी । राजति मुररिपुरतुलविलासी ॥**
**मधुरमण्डनेनामुना यमुनापुलिनमुपेत्य ।**
**वेणुं ध्वनयन् सस्मितं जयति हरिर्मुदमेत्य ॥ १० ॥**

---

* रहस्यको नहीं समझनेवाले रासविहारपर कई प्रकारकी शङ्काएँ किया करते हैं। किंतु रहस्य यह है कि चन्द्रमाकी चाँदनीमें अद्भुत शोभायुक्त यमुना-पुलिनपर पूर्ण शृङ्गार किये अनेक तरुणी व्रजसुन्दरियोंके बीच अकेले श्रीकृष्णको पाकर कामदेवको अपने प्रभावपर अभिमान होता है। आप इसे समझ जाते हैं और मन्मथको शिक्षा देनेके लिये उसका गर्वगञ्जन करते हैं। किंतु ऐसा करनेके पूर्व अपना हौसला पूरा करनेके लिये कामदेवको अपनी सेना आदि सामग्री जुटानेका आप पूरा अवसर देते हैं। हजारों व्रजसुन्दरियाँ भावके उद्रेकमें श्रीहरिको घेर लेती हैं। कामयुद्धकी बिगुल वंशी बजती है। एक-एकका हाथ पकड़कर रास-विलास आरम्भ होता है। कामदेव और साथ ही उसकी सेना ( व्रजसुन्दियों ) को भी अभिमान हो जाता है। उसी समय उसे खर्व करते हुए आप 'अन्तर्हित' हो जाते हैं। बस, स्थान-स्थानपर मदनविजयकी यही सूचना 'श्रीमद्भागवत'के आधारपर दी गयी है।

शेखरेण शिरोभूषणेन राजति तच्छीलः । केयूराभ्यां भुजभूषणाभ्यां विभासते । मध्ये केयूरयोर्मध्ये जटितं यन्माणिक्यं तेन चकास्ति ॥ ६ ॥ कुण्डलयोर्भासा कान्त्या । कम्बुसदृशे कण्ठे राजत् मणिदाम रत्नस्रक् यस्य । धाम तेजः ॥ ७ ॥ मणिबन्धे प्रकोष्ठे । निरुन्धे चाकचक्यमुत्पादयति । तारालिः तारकपङ्क्तिः, पीतपटे मणिकाञ्ची सांध्यगगने पीततया तारकपङ्क्तिरिवेत्याशयः ॥ ८ ॥ नीलं जङ्घायुगं नूनं ( मन्ये ) नीलमणिनिर्मितमित्यर्थः ॥ ९ ॥ अमुना सुभगवेषेण ( उपलक्षितः ) । मुदं हर्षम् एत्य प्राप्य वेणुं वादयन् ॥ १० ॥

मस्तकपर सुगन्धित पुष्पोंका सेहरा शोभित है तथा कानोंमें कुण्डल झलमला रहे हैं । भुजाओंमें सोनेके बाजूवंद हैं, जिनके मध्यमें जड़ा हुआ अमोल मानिक जगमगा रहा है ॥ ६ ॥ मणिमय कुण्डलोंकी चमक सुन्दर मुखपर पड़ रही है तथा नवीन मणिसे नासिका चमक रही है । शङ्खके समान सुडौल ग्रीवासे मणिके हारोंकी शोभा हो रही है । ( साधारण कण्ठदेश मणिहारोंसे सुशोभित होते हैं, किंतु भगवान्‌के कण्ठप्रान्तमें रहनेसे मणिहार स्वयं शोभित हो रहे हैं—यह विशेषता व्यङ्ग्य है । ) मुखशोभाके द्वारा यह शरत्कालिक चन्द्रमा भी जीत लिया गया है ॥ ७ ॥ सोनेके कड़ोंसे शोभित कलाईमें रत्नोंकी कान्ति आँखोंको चौंधिया देती है । पीताम्बरपर मणियोंकी सुरम्य करधनी ऐसी फब रही है मानो संध्याके पीले आकाशमें नक्षत्रावलि ( तारोंकी पंक्ति ) छिटक रही हो ॥ ८ ॥ सुडौल पिंडलियाँ ऐसी भली लगती हैं मानो नीलमणिकी बनी हों । यों रमणियोंका मन हरण करनेवाले रूप एवं विलासोंसे युक्त मुरारि सुशोभित हैं ॥ ९ ॥ पूर्वोक्त मधुर वेषसे यमुनापुलिनपर आकर प्रसन्नताके साथ वंशी बजाते हुए भगवान् श्रीहरिकी विजय हो । ( आगे होनेवाले युद्धमें 'विजय' शब्दसे मङ्गल-सूचना दी गयी है ) ॥ १० ॥

**मुरलीस्वरलहरी प्रचरन्ती । युवतिनिकेतमगान्मदयन्ती ॥**
**श्रवसि जगौ प्रियतमसंदेशम् । जनयन्ती हृदि मदनावेशम् ॥**

गृहकार्याणि विमुच्य सहेलम् । ययुर्गोपिका हरिमनुवेलम् ॥
अपदविहितभूषणविन्यासा । सरभसमचलद्युवतिसभा सा ॥
श्रोणितटे दधती मणिहारम् । उरसि दधौ काञ्चीमविचारम् ॥
भुजयोः कापि नूपुरे निदधौ । पदयुगले केयूरे विदधौ ॥
काचिदुत्तरीयं परिदधती । शिरसि शाटिकां निदधौ युवती॥
एवं प्रणयसम्भ्रमाधीना । युवतिमण्डली हरिमनु लीना ॥

पप्रच्छागमहेतुममृतगिरा रमयन् हरिः ।
ता विहारमभ्येतुमैच्छन् हृच्छयमोहिताः ॥ १५ ॥

प्रचरन्ती गगने भ्राम्यन्ती । निकेतं निवासम् । मदयन्ती गोपिका मत्ताः कुर्वती ॥ ११ ॥ अनुवेलम् शीघ्रमिति यावत् । अपदे अस्थाने विहितो भूषणविन्यासो यया । युवतीनां सभा मण्डली ॥ १२ ॥ अविचारम् अविचार्यैवेत्यर्थः ॥ १३ ॥ उत्तरीयमुपरिवस्त्रम्, परिदधती शाटिकास्थाने धारयन्ती । हरिमनु हरिसमीपे, लीना प्राप्तेत्यर्थः ॥ १४ ॥ अमृतगिरा अमृतमधुरया वाण्या, रमयन् प्रीणयन् । हृच्छयमोहिताः मदनवशीकृताः ताः गोप्यः विहारं रतिक्रीडाम् अभ्येतुं प्राप्तुमैच्छन् रासविलासमर्थितवत्य इत्यर्थः ॥ १५ ॥

आकाशमें चक्कर काटती हुई मुरलीकी वह मादक स्वरलहरी गोपियोंके निवासमें पहुँची। उसने उनके कानमें प्रियतमका संदेश कह दिया, जिससे हृदयमें मदन (प्रेम)का आवेश हो गया ॥ ११ ॥ बेपरवाहीसे घरके कामोंको छोड़कर गोपिकाएँ श्रीहरिकी ओर तुरंत चल पड़ीं। वह युवतियोंकी मण्डली बड़ी हड़बड़ाहटसे चली, यहाँतक कि वस्त्र और आभूषण उन्होंने उलटे-पुलटे पहन लिये ॥ १२ ॥ कमरमें मणियोंका हार धारण कर लिया और वक्षःस्थलपर बिना विचारे करधनी डाल ली। बाजूबंदकी जगह नूपुर पहन लिये और दोनों चरणोंमें बाजूबंद धारण कर लिये ॥ १३ ॥ किसीने चादरको साड़ीकी जगह पहन लिया और सिरपर साड़ीको ओढ़ लिया। इस तरह प्रेमजनित हड़बड़ाहटके वशीभूत हुई

गोपीमण्डली श्रीहरिके पास पहुँची ॥ १४ ॥ अमृतसदृश वाणीसे सबको प्रसन्न करते हुए श्रीहरिने उन लोगोंके वहाँ आनेका कारण पूछा। मदनावेशके वशीभूत हुई उन्होंने यही इच्छा प्रकट की कि 'आपके निकट हमको क्रीड़ाका अवसर मिले' ॥ १५ ॥

**प्रणयमहेतुमयन् वनमाली । तोषमियेष वेणुरवशाली ॥**
**राकापतिरम्बरमधिभेजे । अमृतमयैः किरणैः परिरेजे ॥**
**विमलपुलिनमतुलां द्युतिमागात् । चन्द्रचूर्णचयरचितमिवाभात् ॥**
**विकचकुमुदिनी निर्भरगन्धी । ववौ मारुतो मानसबन्धी ॥**
**मधुरमालतीसुरभिसमीपे । युवतिमनसि मदनोऽनुदिदीपे ॥**
**तास्त्रिलोकसुन्दरधृतकामाः । हरिसमीपमीयुर्व्रजवामाः ॥**
**वशीकारिविभ्रमशतशाली । रमणमोदमाधाद् वनमाली ॥**
**मनसि मनोजभावसंरब्धा । प्रतिवनिता दयिताय विलुब्धा ॥**
**हरिरतुलां रतिमात्मगां रमणीनामनुमाय ।**
**महिलामण्डलमध्यगो रमणविनोदमियाय ॥ २० ॥**

अहेतुम् अकारणं स्वाभाविकमित्याशयः । तासां प्रणयम् अयन् जानन् । तोषम् इयेष तासां गोपीनां प्रसन्नतामवाञ्छत् । राकापतिः पूर्णिमाचन्द्रः आकाशमधिरुरोह ॥ १६ ॥ चमत्कुर्वद्रेणुकणशालि पुलिनम् असंख्यचन्द्राणां चूर्णचयेन क्षोदराशिना निर्मितमिव अभात् भाति स्म ॥ १७॥ मालतीसुरभेः घ्राणतर्पणगन्धस्य समीपे मालतीसौरभमाघ्रायेत्यर्थः । त्रिलोकसुन्दरे हरौ धृतः कामोऽभिलाषो याभिः ॥ १८ ॥ रमणमोदं रमणं कृत्वा प्रमोदम् आधात् चकार। मनोजभावेन कामविकारेण संरब्धा संरम्भशालिनी प्रत्येकवनिता दयितार्थं विलुब्धा उत्कण्ठिता ॥ १९ ॥ रमणीनां आत्म(स्व) गतां प्रीतिं ज्ञात्वा। रमणविनोदम् इयाय चक्रे इत्याशयः॥२०॥

श्रीहरिने उनकी अहैतुक ( स्वाभाविक ) प्रीति जानकर उनको प्रसन्न करनेकी इच्छा की। उसी समय पूर्णिमाका चन्द्रमा आकाशमें आ गया, अमृतमय किरणोंसे उसकी अद्भुत शोभा थी ॥ १६ ॥ चाँदनीमें

उस निर्मल यमुनापुलिनकी भी अनुपम छटा थी; ऐसा लगता था मानो वह कपूरके चूर्णसे बनाया गया हो। मनको वशीभूत करनेवाला मन्द पवन चलने लगा, जिसमें खिली हुई कुमुदिनी ( रात्रिमें खिलनेवाली कमलिनी ) का गन्ध भरा हुआ था ॥ १७ ॥ व्रजयुवतियोंके मनमें मधुर मालतीकी सुगन्धके साथ-साथ मदन ( प्रेम ) ने अपना प्रभाव फैलाया। त्रैलोक्यसुन्दर श्रीहरिमें जिन्होंने अपनी अभिलाषा केन्द्रित कर दी थी, वे व्रजबालाएँ श्रीहरिके समीप आयीं ॥ १८ ॥ रमणियोंको वशमें करनेवाले अनेक हाव-भावोंसे मनोहर वनमालीने उनके मनमें रमणका आनन्द संचारित किया। मनमें काम (प्रेम )-प्रभावसे विकृत हुई प्रत्येक नारी प्रियतम ( श्रीहरि ) के लिये उत्कण्ठित हो गयी ॥ १९ ॥ श्रीहरिने देखा कि प्रत्येक रमणीकी प्रीति उन्हींमें केन्द्रित है; अतएव उस महिलामण्डलके मध्यमें आकर उन्होंने उनके साथ रमणकी लीला की ॥ २० ॥

**त्रिभुवनमोहनमहिमानयने । मानसमोदमदिशतां नयने ॥**
**रतिविलासकामालसलीला । मदयामास मोदमदशीला ॥**
**नाभिनितम्बनीविपरिधर्षी । रमयामास रमणिगणहर्षी ॥**
**भुजपरिरम्भनर्मपरिहासा । रसिकसभा रेमे सविलासा ॥**
**अधरकपोलनाभिकुचदेशे । स्पृशन् मोहयति मदनावेशे ॥**
**एवं युवतिघटा रममाणा । प्रबभौ प्रियसङ्गाद् धृतमाना ॥**
**मनसि मनसिजः स्वं बहु मेने । हरिरिह हसन् खर्वमातेने ॥**
**महिलानां शमयन्नभिमानम् । स्वीचकार हरिरन्तर्धानम् ॥**
**सहसा हरिमन्तर्हितं वीक्ष्य रमणविरहेण ।**
**विकला व्रजवनिता वनेऽन्वैष्यन् प्रियमचिरेण ॥ २५ ॥**

त्रिभुवनमोहकं महिमानम् आनयतः, त्रिभुवनवशीकरणप्रभावसम्पन्ने इत्यर्थः। रतिविलासेन या कामालसा (कामालसानां वा) लीला। मोदः मदः ( मत्तता ) च शीलं स्वभावो यस्याः सा ॥ २१ ॥ परिधर्षी परिमर्दकः। भुजपरिरम्भः नर्मणा परिहासश्च यस्याः सा। रसिकानां

**गोप्यादीनां सभा मण्डली ॥ २२ ॥ प्रियस्य ( श्रीकृष्णस्य ) सङ्गाद् धारिताभिमाना ॥ २३ ॥ स्वम् आत्मानम् बहु मेने, मया हरिं रमणीनां विलासवशंवदं कृत्वा विजयो लब्धः इति गर्वं चकारेत्यर्थः । हसन् हरिः तं कामम् खर्वं विनतम् आतेने चकार । ( अतएव ) श्रीकृष्णं निजवशगं मन्वानानां महिलानां गर्वं परिहरन् ॥ २४ ॥ रमणस्य ( प्रेष्ठस्य ) विरहेण विकलाः अन्वैष्यन् अन्विष्यन्ति स्म ॥ २५ ॥**

त्रिभुवनको मोहित करनेवाली अलौकिक महिमासे युक्त दोनों नेत्रोंने गोपियोंके मनमें एक अलौकिक हर्ष उत्पन्न किया। गोपियोंपर अनुग्रह करनेके लिये आपने प्रेमके हाव-भाव दिखाकर कामसे शिथिल हुए पुरुषों-की लीला दिखायी, जिससे सब गोपियोंके अंदर आनन्दके साथ-साथ मस्ती भी आ गयी ॥ २१ ॥ अब आपने उस रमणीसमूहको हर्षित करते हुए उस रासनृत्यमें उनकी नाभि, नितम्बों एवं कटि-प्रदेशका स्पर्श करके उनको प्रेममत्त कर दिया। अब दोनों ओरसे आलिङ्गन, हँसी-मजाक और नाना विलास चलने लगे, जिससे वह रासमण्डली प्रसन्न हो गयी॥२२॥ कभी रास करते हुए आप गोपियोंके अधर, कपोल, नाभि और स्तनोंका स्पर्श कर लेते, जिससे मदनावेशमें बेबस हुई वे एकदम मोहित हो जातीं। इस तरह क्रीड़ा करते-करते गोपीमण्डलीके मनमें अभिमान हुआ कि प्रियतम हमारे वशमें हैं ॥ २३ ॥ इधर कामने भी अपने मनमें बड़ा गर्व किया कि 'अब क्या है, मेरे प्रभावसे श्रीहरि पूरे-के-पूरे मेरे वशमें हैं'। भगवान् यह समझकर मनमें हँसे और कामके गर्वको दूर करनेका विचार किया। इधर नारियोंका अभिमान भी दूर करना था। अतएव आप अचानक अन्तर्हित—देखते-देखते अलक्षित हो गये ॥ २४ ॥ श्रीहरिको सहसा अन्तर्हित देखकर प्रियविरहसे व्याकुल हुईं वे व्रजवनिताएँ सहसा उस वनमें प्रियतमको खोजने लगीं ॥ २५ ॥

**वञ्जुलविपिनवीथिवनकुञ्जे । वापीविटपिवाटिकापुञ्जे ॥**
**वंशगुल्मवानीरनिकाये । विविधवल्लिवीरुत्समुदाये ॥२६॥**

विचरन्त्यो व्रजवनिताः कामम् । प्रियं व्यचैषुरनिशमभिरामम् ॥
कुटजकुन्दकुरुविन्दमगच्छन् । निचुलनीपनीवारमपृच्छन् ॥
एवं हरिपरिदर्शनकामा । युवतिराजिरभ्रमदविरामा ॥
हृदयदयितमनवाप्य विपण्णा । यमुनारोधसि निभृतनिषण्णा ॥
व्रजवामाततिरन्तरधामा । हरिचरितान्यनुचक्रे क्षामा ॥
अन्ते दीपितदारुणविरहा । सुस्वरमरुदन्निर्भरमसहा ॥
स्वगतहृदयतां योषितां विह्वलतां विरहेण ।
तासां वीक्ष्य हरिर्हसन्नाविरभूदचिरेण ॥ ३० ॥

वञ्जुलविपिनम् अशोकवनम् । वनकुञ्जे इत्यादि समाहारे क्लीबमेकवचनं च । वानीरनिकाये वेतसपुञ्जे । वीरुत् प्रतानिनी ( दीर्घविस्तारयुक्ता ) लता ॥ २६ ॥ व्यचैषुः अन्वैषयन् । कुटजकुन्देत्यादिद्वन्द्वयोः 'विभाषा वृक्षमृग०' इत्यादिना एकवद्भावः ॥ २७ ॥ अविरामा नास्ति विश्रामो यस्याः ईदृशी अभ्रमत् । निभृते एकान्ते स्थिता ॥ २८ ॥ अन्तरे हृदयाभ्यन्तरे धाम हरेर्निवासो यस्याः । क्षामा विरहकृशा । हरिचरितानि अनुचक्रे एका गोपी कृष्णभूमिकामधारयत् अन्या पूतना समवर्तिष्टेत्यादिलीला अनुचक्रुरित्यर्थः । निर्भरम् अत्यन्तं असहा विरहासहिष्णुः ॥ २९ ॥ योषितां व्रजस्त्रीणां स्वगतहृदयतां हरिसमर्पितचित्तताम् ॥ ३० ॥

अशोकवन, वृक्षोंकी पङ्क्तियोंसे घिरे हुए मार्ग, उपवन, लताकुञ्ज, बावली, बड़े गहन वृक्ष, छोटी वाटिकाएँ—और तो क्या, बाँसोंके झुरमुट, बेंतोंके झुंड तथा विविध लता-वल्लरियोंतकमें घुसकर प्रियतमकी उन्होंने खोज की ॥ २६ ॥ भला, त्रैलोक्यसुन्दरके बिना उन्हें चैन कहाँ । अब वे कुटज, कुन्द आदि वृक्षोंके पास पहुँचीं तथा बेंत, कदम्ब आदिसे प्रश्न करने लगीं ॥ २७ ॥ इस प्रकार हरिदर्शनके लिये छटपटाती वह युवती-मण्डली बिना विश्राम किये यों बराबर घूमने लगी ( घूमते-घूमते थक गयी ) । अपने प्राणप्रियको न पाकर एकदम उदास हुई वह मण्डली यमुनातीरपर चुपचाप बैठ गयी ॥ २८ ॥ श्रीहरि जिसके हृदयमें घर कर चुके थे, थोड़े

ही कालमें वर्षोंके विरहकी तरह दुर्बल हुई वह गोपीमण्डली भगवान्के चरित्रोंका अभिनय करने लगी। उदाहरणके लिये एक गोपी पूतना बन जाती है और दूसरी हरि बन जाती है और पूतनाका उद्धार करती है, तब लाचार होकर वह गोपीमण्डली जोरसे रो पड़ती है॥ २९॥ (बस, भगवान् तो अपने भक्तोंकी सच्ची प्रीतिको परखा करते हैं।) जब आपने देखा कि गोपियोंने अपना हृदय मुझे समर्पण कर दिया है और विरहसे वे एकदम विह्वल हैं, तब (जहाँसे आप छिपे थे, वहीं गोपियोंकी मण्डलीके बीचोबीच) हँसते हुए अचानक प्रकट हो गये॥ ३०॥

**हृदयदयितमागतमवपश्यन् । गोपीराशिरुदस्थाद्धृष्यन् ॥**
**कापि हरेर्भुजमंसे निदधौ । कापि तदङ्घ्रिमुरोजे विदधौ ॥**
**दृक्पथतो हरिमन्तर्दधती । कापि पुलकिताप्रीयत सुदती ॥**
**सत्यं प्रणयमेवमनुरुन्धन् । मदनदर्पशममेवं विन्दन् ॥३२॥**
**प्रीतो हरिरारेभे रासम् । अन्योन्याहतबाहुविलासम् ॥**
**गोपीयुगमध्ये हरिरासीत् । हरियुगले गोपी समभासीत् ॥**
**गोपीकरमादाद् गिरिधारी । गिरिधरकरमवहद् व्रजनारी ॥**
**एवं व्रजपतिगोपीमाला । पुलिनेऽस्मिन् विजहार विशाला ॥**
**अनुपमशोभावैभवं रमणीरासविलासि ।**
**व्रजजनताजीवननिधेर्जयति जगत् त्रयभासि ॥ ३५ ॥**

हृष्यन् हृष्टः सन् उदस्थात् उदतिष्ठत्॥ ३१॥ दृक्पथतो हरिम् अन्तः दधती नयनयोर्मार्गेण हृदयाभ्यन्तरे हरिं स्थापयन्ती कापि सुदती अप्रीयत। एवं प्रणयम् अनुरुन्धन् प्रणयस्यानुरोधं रक्षन्। मदनस्य गर्वशमनम् एवं प्राप्नुवन् मदनविजयमेवं कुर्वन्नित्याशयः॥ ३२॥ आहतो बाहुविलासो यस्मिन्, अन्योन्याबद्धभुजमित्यर्थः। समभासीत् सम् अभासीत् अशोभत॥ ३३॥ व्रजजनजीवनधनस्य हरे रमणीनां रासे विलसति तच्छीलं अनुपमं शोभावैभवं जयतीति समाप्तिमङ्गलम्॥ ३५॥

अपने हृदयवल्लभ (प्राणप्यारे) को आया हुआ देखते ही वह गोपीमण्डली प्रसन्न होकर उठ खड़ी हुई। किसीने श्रीहरिकी भुजाको

अपने कंधेपर रख लिया, किसीने उनके चरणको अपने हृदयपर रख लिया ॥३१॥ नेत्रमार्गसे श्रीहरिको अपने अन्तःकरणमें धारण करती हुई कोई सुन्दरी अत्यन्त प्रसन्न होकर रोमाञ्चित हो गयी। यों सच्चे प्रेमका अनुरोध रखते और कामदेवके गर्वको भी शान्त करते हुए श्रीहरिने प्रसन्न होकर रासका आरम्भ किया, जिसमें श्रीहरि और गोपियोंने एक दूसरेका हाथ पकड़ लिया। दो गोपियोंके बीचमें एक हरि थे और दो हरिमूर्तियोंके बीच एक गोपी शोभित हो रही थी। गोपीका हाथ भगवान्ने पकड़ रखा था और श्रीहरिका हाथ गोपीने पकड़ रखा था। यों ( भगवान्की दिव्य महिमासे ) व्रजपति और गोपियोंकी वह विशाल माला उस यमुना-पुलिनमें विहार करने लगी ॥ ३२–३४ ॥ व्रजजनोंके जीवननिधि भगवान् श्रीकृष्णका गोपरमणियोंके साथ रासविलासका यह निरुपम शोभा-वैभव, जो तीनों लोकोंमें प्रसिद्ध है, सब प्रकार विजयशाली है ॥ ३५ ॥

---

## [ ४१ ]

## 'कुण्डलिया'-खण्डः

**वाणीगुणमिममर्थये येन यदुपतिं स्तौमि।**
**चरणनलिनसेवापरो हेवाकादभिनौमि ॥**
**हेवाकादभिनौमि सर्वतः सुकृतमुदयते।**
**व्रजपतिलीलाशीलनेन लोको मुदमयते ॥**
**एतदेव याचामि देव विनिबध्नन् पाणी।**
**भवच्चरणगुणवर्णनेन रमतां मम वाणी ॥ १ ॥**

**वाण्या गुणम् इममेव अर्थये प्रार्थये यद्द्वारा भगवन्तं स्तौमि। हेवाकात् अभिलाषातिशयात्। व्रजप०—व्रजनायकस्य श्रीकृष्णस्य लीलानां परिशीलनेन पुनःपुनर्गानेन श्रवणेन च प्रेमिजनो मोदम् अयते प्राप्नोति। पाणी विनिबध्नन् प्रार्थनाञ्जलिं कुर्वन् ॥ १ ॥**

वाणीका मैं यही गुण चाहता हूँ, जिस गुणके द्वारा मैं भगवान्की

स्तुति कर सकूँ। साथ ही उनके चरण-कमलोंकी सेवा करता हुआ चावसे उनकी वन्दना करूँ, जिससे सब ओर ( क्या यहाँ और क्या परलोकमें ) कल्याणका उदय होता है। ( मैं जानता हूँ कि ) व्रजनायक भगवान्‌की लीलाओंका आस्वादन करनेसे भक्तलोग प्रसन्न होते हैं। इसीलिये हे भगवन्! मैं हाथ जोड़कर आपसे यही माँगता हूँ कि आपके चरणोंके गुणगानसे ही मेरी वाणी आनन्दित हो ॥ १ ॥

**मधुसूदनपदपङ्कजे रज्यच्चिन्मधुपस्य।**
**देवा अपि सेवां दधति भूरिभाग्यविभवस्य॥**
**भूरिभाग्यविभवस्य यस्य हरिनामसनाथा।**
**रसना रसनालीव सदा प्रवहद्गुणगाथा॥**
**चरणकमलपतितोऽस्मि पश्य हे कंसनिषूदन।**
**तदिह देहि तव सदयदृशं मय्यपि मधुसूदन॥ २॥**

**रज्यच्चि०—अनुरज्यन् चेतनारूपो मधुकरो यस्य तादृशस्य बहु-भाग्यवैभवस्य पुरुषस्य देवा अपि सेवां कुर्वन्ति। रसस्य आस्वाद्यस्य आनन्दस्य नालिकेव सर्वदा प्रवहन्ती भगवतो गुणगाथा यस्याम् हरिनाम-सनाथायाम् आनन्दस्य नालिकायामिव यस्यां जिह्वायां भगवतो गुणसंकथा सर्वदा प्रवहति इत्याशयः। इह एतस्मिन् मयि अपि यथा पूर्वचरणे कथितं माहात्म्यमाविर्भवति तथा सदयां दृष्टिं देहि॥ २॥**

भगवान् मधुसूदनके चरणरूपी कमलमें जिसका चित्तरूपी भौंरा अनुरक्त हो गया है तथा रसकी नालीके समान जिस बड़भागीकी हरिनामसे युक्त रसनामें श्रीहरिके गुणोंकी गाथारूप अमृत सदा बहता रहता है, उस बड़भागीकी देवता भी सेवा करते हैं। हे कंसको पछाड़नेवाले! देखिये, मैं आपके चरणकमलोंमें पड़ा हूँ; इसलिये इस दीनपर भी हे मधुसूदन! दयापूर्ण दृष्टि डालिये॥ २॥

**गोवर्द्धनधारी सकलसुरसुखकारी भाति।**
**यः किल रासक्रीडया रवितनयामनुयाति॥**

रवितनयामनुयाति कोटिकामद्युतिशाली ।
व्रजवनिताह्वानाय रणद्वेणुर्वनमाली ॥
भक्तभीतिहरणाय सदा व्रजविपिनविहारी ।
कर्णे कलयतु दीनगिरं गोवर्द्धनधारी ॥ ३ ॥

रासक्रीडायाः हेतुना यमुनामनुगच्छति । आह्वानाय रणन् शब्दं कुर्वन् वेणुः वंशीवाद्यम् यस्य सः । दीनानां दीनां वा गिरम् वाणीम् कर्णे करोतु शृणोतु इत्यर्थः ॥ ३ ॥

समस्त देवताओंको ( आपत्तियोंसे बचाकर ) सब तरहका सुख देनेवाले श्रीगोवर्धनधारी विराजित हैं । जो रासक्रीड़ाके कारण श्रीयमुनाके तटपर जाते हैं, कोटि-कोटि कामदेवोंकी-सी कान्तिवाले जो वनमाली व्रज-वनिताओंको बुलानेके हेतु वेणु वजाते हैं, भक्तोंका भय हरनेके लिये जिन्होंने व्रज तथा उसके वनोंमें विहार किया, वे गोवर्धनधारी हमारी दीनवाणीपर कान दें ॥ ३ ॥

कालिन्दीपुलिने पथिक ! तरुणतमालमुपेहि ।
शिरसि यस्य बर्हीं लसति, तदनु शुकं दृशि देहि ॥
तदनु शुकं दृशि देहि, कपोतस्तदधो राजति ।
कुसुमराशिरस्यान्तिके हि सुभृशं विभ्राजति ॥
विद्युद् द्युतिमुपयाति हंसमुखरे नवनलिने ।
मञ्जुनाथ नय मानसं नु कालिन्दीपुलिने ॥ ४ ॥

तरुणतमालम् अर्थात् श्रीकृष्णम् शरणं गच्छ । बर्हीं बर्हिपक्षयुक्तं मुकुटम् । दृशि दृष्टौ शुकं देहि, नासिकां पश्य । तस्य अधः, कपोतः कपोत-सदृशसंस्थानः कण्ठः । अस्य कण्ठस्य समीपे कुसुमराशिः कुसुमगुम्फिता वनमाला । हंसाभ्यां मुखरे शब्दायमाने नवनलिने हीरकनिर्मिताभ्यां हंसकाभ्यां चरणवलयाभ्यां सशब्दे कमलसदृशे चरणयुगले । विद्युत् विद्युत्सदृशः पीतपटः कान्तिं याति । अतएव एतादृक्शोभादर्शनाय मानसं यमुनातटे नय ॥ रूपकातिशयोक्तिः ॥ ४ ॥

हे पथिक ! यमुनातटपर एक तरुण तमाल ( श्रीकृष्ण ) का आश्रय लीजिये, जिसके सिरपर मोर ( मोर-मुकुट ) का निवास है। उसके नीचे एक शुक ( शुकचञ्चु-सदृश नासिका ) को दृष्टिमें लाइये। उसके नीचे कपोत ( कपोत-सदृश कण्ठ ) की शोभा है। उसके ( कण्ठके ) निकट ही कुसुमसमूह ( वैजयन्ती माला ) की अलौकिक शोभा है। हंसोंसे ( हंस-सदृश हीरेके नूपुरोंसे ) शब्दायमान दो कमलों ( चरणों ) पर बिजलीकी कान्ति ( चरणोंतक छिटका हुआ बिजलीके-से वर्णवाला पीताम्बर ) शोभित है। हे मञ्जुनाथ ! कालिन्दी-पुलिनपर इस मनको ले चलो। ( शिखासे चरणपर्यन्त वर्णन, अतिशयोक्ति अलंकार ) ॥ ४ ॥

**जय जलभृतनवनीरधर सुन्दर नन्दकुमार।**<br>
**कालिन्दीतटनिकटभुवि विरचितरासविहार ॥**<br>
**विरचितरासविहार मारसुषमामदहारक।**<br>
**व्रजवनिताशतमोहनाय नानातनुधारक ॥**<br>
**चपलाशतपरिवृतश्यामघनशतशोभामय ।**<br>
**वृन्दावनवसुधाविनोदिलीलाधर जय जय ॥ ५ ॥**

**जलेन भृतः पूर्णः नीरधरः मेघः। मारः कामदेवः। अनन्तगोपिकानां मोहनाय स्वयमप्यनेकमूर्तिधारक। अतएव प्रत्येकगोप्याः सविधे एकैकः कृष्णः। नानामूर्तिधारणेन विद्युच्छतपरिवृतं यत् श्यामघनानां शतं तच्छोभामय। विनोदिनी या लीला ॥ ५ ॥**

जलसे भरे नवीन मेघकी तरह सुन्दर नन्दकुमार ! आपकी जय हो। आपने यमुनातटके निकट रासविहार किया था। आप रासविहार करके कामदेवकी शोभाके गर्वको दूर करनेवाले हैं। व्रजवनितासमूहको मोहित करनेके लिये ही आप रासमें अनेक रूप ग्रहण करते हैं। उस समय आप सैकड़ों बिजलियोंद्वारा आलिङ्गित सैकड़ों श्याममेघोंकी शोभाको धारण करते हैं। वृन्दावनकी भूमिके लिये प्रमोदजनक लीलाको स्वीकार करनेवाले श्रीहरि ! आपकी जय हो ॥ ५ ॥

व्रजनायकनयनाञ्चलं न्यञ्चति चेद् विभवेन ।
भूरिभयानकभवविपद् विलयमुपैति पलेन ॥
विलयमुपैति पलेन रश्मिरोधकघनतिमिरम् ।
भाग्यभानुरभिभाति याति शोकानां शिबिरम् ॥
दुष्टदैत्यदलदलन देवगणमङ्गलदायक ।
कोटिकोटिकन्दर्परुचिर जय जय व्रजनायक ॥ ६ ॥

भाग्यवैभवेन हरेर्नयनाञ्चलं यदि न्यञ्चति मदुपरि पतति । तिमिरं दौर्भाग्यरूपम्, अज्ञानरूपम् वा । शिबिरं समूहः ॥ ६ ॥

मेरे किसी अनिर्वचनीय भाग्यवैभवसे यदि मुझपर व्रजपतिकी दृष्टि पड़ जाय तो पलभरमें जन्म-मरणकी भयानक विपत्ति विलीन हो जाय तथा सौभाग्य-सूर्यकी किरणोंको रोकनेवाला दुर्भाग्यरूप घनान्धकार भी पलभरमें बिला जाय। फिर भाग्यभानुका प्रकाश सर्वत्र फैल जाय और शोक-चिन्ताओंका डेरा ही उठ जाय। दुष्ट दैत्योंके दलका दलन करनेवाले तथा देवगणोंका मङ्गल करनेवाले, कोटि-कोटि कामदेवोंके समान सुन्दर व्रजनायक ! आपकी जय हो ! जय हो ॥ ६ ॥

## रूपमुग्धा गोपी

वनमाली विहरति वने जलदाली जटिलास्ति ।
याति चांशुमाली शमं चपला नभसि चकास्ति ॥
चपला नभसि चकास्ति कास्ति तव नारी निकटे ।
को मार्गं तव बोधयेत मार्गेऽस्मिन् विकटे ॥
यदवधि नन्दात्मजोऽलोकि मुरलीरवशाली ।
तदवधि संदानिता नैति वृन्दावनमाली ॥ ७ ॥

जलदानाम् आली घटा । अंशुमाली सूर्यः शमम् अस्तं याति । का नारी सहायिका । अन्यस्या निजसख्या वृत्तान्तं सूचयित्वा सखी परिबोधयति यत् तया मे प्रियसख्या मुरलीवादनशाली हरिः यदवधि अलोकि दृष्टः तदवधि

**संदानिता प्रेमपाशबद्धा सा आली वृन्दावनं नैति, अपितु गृहं विहाय नन्दसूनोरनुसारेण वनाद्वनं विचरतीत्यर्थः ॥ ७ ॥**

वनमाली वनमें विहार कर रहे हैं और इधर आकाशमें मेघघटा घनी हो गयी है। भगवान् अंशुमाली छिप गये हैं। आकाशमें बिजली रह-रहकर कौंध रही है। ( इस समय ) कौन नारी तुम्हारे पास है ( जो तुम्हारी सहायता कर सके ) ? इस विकट मार्गमें तुम्हें रास्ता भी कौन बतायेगा ? मुरलीपर तान छेड़नेवाले नन्दकुमारको जबसे उसने देखा है तभीसे प्रेममें बँधी वह आली वृन्दावनमें नहीं आती, किंतु उनके साथ-साथ वन-वनमें घूमती है ) ॥ ७ ॥



[ ४२ ]

## षट्पद ( छप्पय )-पटलम्

**जयति जलधिपरिरचितशेषशय्योपरिशायी ।**
**नाभिनलिननिस्सरच्चतुर्मुखनुतिपरिचायी ॥**
**कमलाकरकमलाभिजातसंवाहनशाली ।**
**कौस्तुभमणिविभ्राजदुरसि विलुठद्वनमाली ॥**
**यः प्रणमदमरमुकुटच्छटानीराजितचरणो लसति ।**
**स हि सकललोकविलसितविभो विभुर्विश्वरूपो जयति ॥ १ ॥**

**चतुर्मुखस्य नुतिं स्तुतिं परिचिनोति स्वीकरोतीति यावत्। कमलायाः करकमलाभ्यां संजातं यत्संवाहनं पदसंवाहनम् । विभ्राजमाने उरसि विलुठन्ती वनमाला यस्य। सकलेषु लोकेषु विलसिता विभा कान्तिर्यस्य । भगवत्कलां विना लोकानां स्थितिरेव न ॥ १ ॥**

समुद्रपर बिछी शेषशय्यापर जो शयन करते हैं, नाभिकमलसे प्रकट हुए ब्रह्माके द्वारा की गयी स्तुतिको जो ग्रहण करते हैं, लक्ष्मीके करकमलों-द्वारा की जानेवाली चरण-परिचर्यासे जो अनुपम शोभा धारण करते हैं, कौस्तुभमणिसे उद्भासित जिनके वक्षःस्थलपर वनमाली लोटती रहती है,

प्रणत हुए देवताओंकी मुकुट-कान्तिसे जिनके चरणोंकी आरती होती रहती है तथा सम्पूर्ण लोकोंमें जिनकी कान्ति सुशोभित है, ऐसे विश्वरूप भगवान्‌की जय हो ॥ १ ॥

जय जलजासनविहितरम्यसामस्तुतिभासिन् ।
जय जलनिधिजाहृदयवसतिवैकुण्ठविलासिन् ॥
जय जलजोपमचरणचञ्चरीकायितमुनिचय ।
जय जलजायितनयननाट्यनिष्पाद्यजगत्त्रय ॥
जय जलधरनिभनीलरुचिरोचितमञ्जुलमूर्तिधर ।
जय जडजङ्गमविश्वचर दामोदर दैतेयहर ॥ २ ॥

कमलासनेन ब्रह्मणा विहिता या साम्ना सामवेदेन स्तुतिः । सागरकन्यका ( लक्ष्मी )-हृदयनिवासी चासौ वैकुण्ठविलासी चेति कर्मधारयः । कमलसदृशस्य नयनस्य नाट्येन इङ्गितेन निष्पाद्यं प्रादुर्भावनीयं जगत्त्रयं यस्य । नीलरुच्या रोचिता प्रकाशिता या मञ्जुला मूर्तिः । जडे जङ्गमे च विश्वस्मिन् संसारे चरति ॥ २ ॥

जो ब्रह्माके द्वारा की गयी सुरम्य सामवेदकी स्तुतिसे सुशोभित हैं, जिनका लक्ष्मीके हृदयमें निवास है और जो वैकुण्ठमें विलास करते हैं, जिनके चरणरूपी कमलोंपर मुनिजन भ्रमरोंकी भाँति लुभाये रहते हैं, जिनके कमलसदृश नेत्रोंके नाट्यमात्रसे तीनों लोकोंका निर्माण होता है, जो जलधरके समान श्याम और मनोहर मूर्तिको धारण करते हैं तथा जो चर और अचर विश्वमें व्याप्त हैं एवं दैत्योंका संहार करनेवाले हैं—ऐसे हे दामोदर ! आपकी जय हो ॥ २ ॥

चिन्तामणिचयरचितचारुपीठस्थितचरणे ।
कलकौस्तुभमणिकिरणकर्बुरितदिव्याभरणे ॥
प्रणतलोकपालप्रतीक्ष्यकरुणार्द्रविलोके ।
शिवविरञ्चिदेवाधिदेवविरचितविश्लोके ॥

जयविजयपारिषद्पाणिना पिहितपुरंदरगतिजवे ।
मम मानस ! मुदितमुपेयतामस्मिन् मुरजिति माधवे ॥ ३ ॥

चिन्तामणीनां चयेन राशिना रचितं यत् चारुपीठं चरणस्थापनार्थं चतुष्किका तत्र स्थितौ चरणौ यस्य तस्मिन् । कलः सुन्दरः । किरणैः कर्बुरितानि चित्रीकृतानि दिव्याभरणानि यस्य तस्मिन् । लोकपालैः प्रतीक्षणीयः करुणया आर्द्रः विलोकः दृष्टिपातो यस्य । शिवश्च विरञ्चिश्चेति यौ देवानामधिदेवौ ताभ्यामपि विरचितो विश्लोकः स्तुतिः यस्य । पिहितः अवरुद्धः पुरंदरस्य इन्द्रस्यापि गतेर्वेगो यत्र । इन्द्रोऽपि पारिषदाज्ञयैव अन्तर्गन्तुं शक्नोति । अन्यथा तु सोऽपि द्वारे एव रुद्धगतिर्भवतीत्यर्थः । मुरविजेतरि माधवे मुदितं प्रमोदः उपेयतां प्राप्यताम् । अनुभूयतामिति यावत् ॥ ३ ॥

चिन्तामणियोंसे निर्मित सुन्दर चौकीपर जिनके चरण स्थित हैं, जिनके दिव्य आभूषण सुन्दर कौस्तुभमणिकी किरणोंसे चित्र-विचित्र हो रहे हैं, बड़े-बड़े लोकपाल भी प्रणाम करते हुए जिनकी कृपादृष्टिकी प्रतीक्षा किया करते हैं, शिव-ब्रह्मा आदि देवाधिदेव भी जिनकी स्तुति किया करते हैं तथा जय-विजय आदि पार्षदोंके हाथों जहाँ देवराज इन्द्रका भी प्रवेश रोक दिया जाता है, मुरको जीतनेवाले ऐसे माधवसे हे चित्त ! तुम प्रमोद प्राप्त करो ॥ ३ ॥

हस्तमेकमुन्नयन् गहनगिरिराजोद्धरणे ।
कटितटमपरं करं नयन्नृत्यायोत्तरणे ॥
मञ्जुलगुञ्जामाल्यमुरसि विलुलितमावहते ।
मूर्द्धनि मणिमयमुकुटमाविनम्रं यो धरते ॥
नृत्यचलच्चरणं सकलभक्ताभयकरणं व्रजे ।
वनमालाभरणं सदा गोवर्द्धनधरणं भजे ॥ ४ ॥

गहनो विशालः । नृत्याय नृत्यं कर्तुम् उत्तरणे रङ्गस्थलावतरणे अपरं करं कटितटम् ( कटितटे ) नयन् । आविनम्रं अभिमुखभागे ईषद्विनतम् 'श्रीनाथ' मूर्तेर्ध्यानम् ॥ ४ ॥

गहन गिरिराजको उठानेमें जिनका एक हस्त-कमल उठा हुआ है और नृत्यकी तैयारीमें जिनका दूसरा हाथ कमरपर रखा है, जो वक्षः-स्थलपर सुन्दर गुञ्जाओंकी माला धारण किये हुए हैं, जिनके श्रीमस्तकपर मणिमय मुकुट झुका हुआ है, नृत्यमें जिनके चरणकमल चञ्चल हो रहे हैं, व्रजमें समस्त भक्तोंको अभय करनेवाले, वनमालाविभूषित श्रीगोवर्द्धनधरण-का मैं सर्वदा भजन करता हूँ ॥ ४ ॥

**निस्साधनशरणेन येन मर्यादा वितता ।**
**दुर्विनीतदुर्दान्तदलान्निजजनततिरविता ॥**
**कौरवकुलमभिभूय पाण्डुसुतविपदपनीता ।**
**भारतनाटकसूत्रकृता भुवि नीता गीता ॥**
**निजवचनं विगणय्य निजभक्तवचनमविलङ्घयन् ।**
**जयति पार्थसारथिरयं निखिलदुर्जनान् निर्जयन् ॥ ५ ॥**

वितता सर्वतः प्रसारिता । दुर्दान्तदलात् भक्तजनमण्डली अविता रक्षिता । नाटकसूत्रधारेण येन भुवि नीता, अनेन गीताया दिव्यत्वं ध्वन्यते । निजवच०—अतएव शस्त्रग्रहणस्य निजां प्रतिज्ञामुल्लङ्घ्य निजभक्तस्य भीष्मस्य वचनं ( अहं समरे हरिणा शस्त्रं ग्राहयिष्यामि ) अविलङ्घयन् सत्यीकुर्वन् पार्थसारथिः श्रीकृष्णः ॥ ५ ॥

निस्साधनोंको शरण देनेवाले जिन्होंने धर्मकी मर्यादा विस्तृत की, दुस्सह दुष्टदलोंसे अपने भक्तोंकी रक्षा की, कौरवकुलकी पराजय करके पाण्डवोंकी विपत्ति दूर की, महाभारतरूपी नाटकके सूत्रधार बनकर जिन्होंने इस धराधाममें गीताकी अवतारणा की, अपनी प्रतिज्ञाका उल्लङ्घन करके भी अपने भक्त ( भीष्म ) की प्रतिज्ञाको पूर्ण करते हुए समस्त दुर्जनोंका पराजय करनेवाले अर्जुनके सारथि उन श्रीकृष्णकी* जय हो ॥ ५ ॥

---

* यहाँ भगवान् श्रीकृष्णके युद्धमें रथका पहिया लेकर शस्त्र न लेनेकी अपनी प्रतिज्ञाको तोड़ने तथा 'आजु जो हरिहि न सस्त्र गहाऊँ' इत्यादि भीष्मकी प्रतिज्ञाको रखनेका उल्लेख किया गया है ।

सकलसूरिरसनावनीषु बत या परिखेलति।
भक्तिभावमधिगम्य सुजनसम्मुखमुद्वेलति॥
यत्प्रसङ्गतोऽप्याशु कलुषनिचया विनिरस्याः।
परमहंसहर्षाय संनिकर्षावनिरस्याः॥
मञ्जुनाथमानसमिदं जपति निर्भरं गामिमाम्।
अवगाहे गोविन्दगुणगानगहनगङ्गामिमाम्॥ ६ ॥

भक्तिभावमुपगम्य सुजनानां सम्मुखे उद्वेलति वर्द्धते, गङ्गापि जातिविशेषस्य गानकीर्तनादिना उद्वेलतीति प्रसिद्धम्। यत्प्रसङ्गमात्रेण पापसमूहाः। दूरीकार्याः भवन्ति। अस्याः गङ्गायाः समीपभूमिः हंसानां योगिनां मरालानां च हर्षाय। इदं मे मनः इमां गाम् एतद्वचनम् रटति। किं तत्? आह—गोविन्दगुणगानरूपां गभीरां पूर्वोक्तां गङ्गामवगाहे स्नानार्थं विलोडयामि॥ ६ ॥

सम्पूर्ण विवेकियोंकी रसनाभूमिपर जो लहराती रहती है, भक्तिभावको प्राप्तकर जो सज्जनोंके सम्मुख उमड़ती है ( गङ्गा भक्तविशेषोंके भजन-कीर्तनसे उमड़ती है, यह प्रसिद्ध है ), जिसकी चर्चामात्रसे शीघ्र ही पाप-समूह दूर हट जाते हैं, जिस ( गङ्गा ) के समीपकी भूमि परमहंसों ( योगी और हंसों ) के हर्षका साधन बनी हुई है, मञ्जुनाथके मनको यही रट लगी है कि उस गोविन्दगुणगानरूपी गहरी गङ्गामें मैं सदा गोता लगाता रहूँ॥ ६ ॥

---

[ ४२ ]

## 'बरवै'-विलासः

स किल कलानिधिरुदितो व्रजविभवाय।
लोचनगोचरमयतां मत्प्रमदाय॥ १ ॥
वृन्दावनघनवीथीविहरणशालि।
व्रजभूभाग्यं भवतान्मम परिपालि॥ २ ॥

**त्रिभुवनजनक जनार्दन जय जगदीश।**
**जय करुणावरुणालय देवाधीश ॥ ३ ॥**

**व्रजवैभवाय उदितः अवतीर्णः कलानिधिः श्रीकृष्णचन्द्रः। व्रजभुवो भाग्यं भागधेयं ( श्रीकृष्णः ) ॥ १-२ ॥**

व्रजकी समृद्धिके हेतु उदय हुआ वह ( अद्भुत ) श्रीकृष्णरूपी चन्द्रमा मुझे आनन्दित करनेके लिये मेरे नेत्रोंके सम्मुख प्रकट हो ॥ १ ॥ वृन्दावनकी सघन कुञ्जवीथियोंमें विहरणशील वह व्रजभूमिका मूर्तिमान् भाग्य मेरा रक्षक बने ॥ २ ॥ त्रिभुवनके स्रष्टा, जगत्के ईश, देवताओंके स्वामी दयासागर जनार्दन ! आपकी जय हो ॥ ३ ॥

## संस्कृत-हिंदीभाषासमकम्

**कोटिकामसमसुन्दर नन्दकिशोर।**
**जय जय श्रीराधामुखचन्द्रचकोर ॥ ४ ॥**
**जय वृषभानुकिशोरीनयनानन्द।**
**जय विह्वलव्रजवनितालीलाकंद ॥ ५ ॥**
**जय जय जगदानन्दन नन्दकुमार।**
**भवबाधाहर राधाप्राणाधार ॥ ६ ॥**

**व्रजवनितानां या लीलाः तासां कन्द मूलकारण ! ॥ ५ ॥ भवबाधाहरेति कृष्णसम्बोधनम्। अथवा भवबाधाहरा या राधा तस्याः प्राणाधार ॥ ६ ॥**

करोड़ों कामदेवोंके समान सुन्दर तथा श्रीराधामुखचन्द्रके लिये चकोर बने हुए श्रीनन्दकिशोर ! तुम्हारी जय हो, जय हो ॥ ४ ॥ श्री-वृषभानुकिशोरीके नेत्रोंको आनन्द देनेवाले तथा विरहसे विकल हुई व्रजवनिताओंको लीलाका सुख प्रदान करनेवाले प्रभो ! तुम्हारी जय हो, जय हो ॥ ५ ॥ जगत्को हर्षित करनेवाले तथा अपने भक्तोंकी जन्म-मृत्यु-रूप बाधाको हरनेवाले, श्रीराधाके प्राणाधार नन्दकुमार ! तुम्हारी जय हो, जय हो ॥ ६ ॥

## संकीर्तन-प्रार्थनम्

कालियकेशिनिषूदन कंसनिकन्द ।
कोटिकामकमनीयक यदुकुलकंद ॥ ७ ॥
गरुडगामिगोवर्द्धनगिरिवरधार ।
गोगोपीगणगोपक गोष्ठाधार ॥ ८ ॥
माधव मधुमुरमर्दन मञ्जुमुकुन्द ।
मुखमुरलीधर मनसिजमाननिकन्द ॥ ९ ॥
चरितचकितचतुराननगापितगीत ।
वाणीपरिवृढवाणीविभवातीत ॥ १० ॥
पुण्डरीकपुरुलोचन पुरुष पुराण ! ।
पद्मनाभ पीताम्बर पद्माप्राण ! ॥ ११ ॥

कमनीय एव कमनीयकः स्वार्थे कन् ॥ ७ ॥ गरुडगामी चासौ गोवर्द्धनाख्यगिरेर्धारकश्चेति कर्मधारयः । गणस्य गोपकः गोप्ता ॥ ८ ॥ मुखे मुरल्याः धारक ॥ ९ ॥ नवीनवत्साविष्करणलीलया चकितो यश्चतुराननः ब्रह्मा तेन गापितानि गीतानि येन सः । वाण्याः परिवृढस्य अधिपतेः बृहस्पतेः या वाणी तस्या विभवमपि अतीत, वाग्विभवातीतेत्यर्थः ॥ १० ॥ पुण्डरीकवत् पुरुणी विशाले लोचने यस्य तत्सम्बुद्धिः ॥ ११ ॥

कालिय एवं केशीको मारनेवाले तथा कंसको पछाड़नेवाले, करोड़ों कामदेवोंके समान कमनीय एवं यदुकुलको सुख देनेवाले ! ॥ ७ ॥ गरुडवाहन, गोवर्धनधरण, गौओं एवं गोपीगणोंकी रक्षा करनेवाले व्रज-जीवन ! ॥ ८ ॥ मधु एवं मुर दैत्योंका संहार करनेवाले, मुखपर मुरली धारण करनेवाले तथा मदनका मान मर्दन करनेवाले मञ्जुमूर्ति लक्ष्मीपति मुकुन्द ! ॥ ९ ॥ चरित्रोंको देखकर चकित हुए चतुरानन तुम्हारा निरन्तर गुणगान करते रहते हैं; किंतु तुम्हारा वास्तविक रूप बृहस्पतिके वाणी-विलाससे भी परे है ॥ १० ॥ तुम्हारे कमलके समान विशाल नेत्र हैं । हे

पद्माके प्राणाधार, पद्मनाभ, पीताम्बर पुराण-पुरुषोत्तम ! तुम्हारी सदा जय हो ॥ ११ ॥

## शोभा

**माधवमूर्द्धनि मुकुटं द्युतिमुपयाति ।**
**तरुणतमाले तिष्ठन् शिखीव भाति ॥ १२ ॥**
**चिकुरकलापे चञ्चत्कुण्डलभास्ति ।**
**नक्षत्रं ननु नीले नभसि चकास्ति ॥ १३ ॥**
**करकमले हरिमुरली मञ्जु ननाद ।**
**कूजन्निव पिकपोतोऽम्बुरुहि ससाद ॥ १४ ॥**
**मौक्तिकमाला विलसति वक्षसि भूरि ।**
**नूनं नीलनभोऽङ्गणमुडुभिरपूरि ॥ १५ ॥**

श्यामवर्णस्य श्रीकृष्णस्य मस्तके मयूरपिच्छानां मुकुटं मयूर इव भातीत्यर्थः ॥ १२ ॥ चञ्चत्०—चमत्कुर्वतः कुण्डलस्य भा कान्तिः अस्ति ॥ १३ ॥ हस्तकमले शब्दायमाना मुरली तथा शोभते यथा कूजन् कोकिल-शावकः अम्बुरुहे ससाद ( निषसाद, तस्थौ ) ॥ १४ ॥ उडुभिः नक्षत्रैः । श्यामवर्णे वक्षःस्थले मुक्तासमूहस्तारकासमूह इव राजतीत्यर्थः ॥ १५ ॥

माधवके मस्तकपर मोरमुकुट इस प्रकार सुशोभित है, जैसे डहडहे एक तमाल वृक्षपर एक मयूर बैठा हो ॥ १२ ॥ बिथुरे हुए केशोंपर चमकते हुए कुण्डलोंकी कान्ति ऐसी प्रतीत होती है, जैसे नीले आकाशमें दो बड़े तारे दमक रहे हों ॥ १३ ॥ श्रीहरिके करकमलोंमें विराजित मुरलीका मधुर नाद हुआ, मानो कूकता हुआ कोयलका बच्चा कमलपर बैठा हो ॥ १४ ॥ श्रीहरिके वक्षःस्थलपर मोतियोंकी माला अत्यन्त शोभा दे रही है, जैसे नील गगनका मध्यभाग तारागणोंसे पूर्ण हो ॥ १५ ॥

## मुरली

**मुरलीधर तव मुरली करलीनापि ।**
**चित्रं तरलीकुरुतेऽधरलीढापि ॥ १६ ॥**

